मन्दाकिनी तर्हि सन्धिप्रस्थापनं सुकरं मन्ये। कथं नु मन्येत भवान् स्वाभिमानं सुरक्षितं कथं च सन्धिं साधितं स्यात्।

दुर्गेश्वर – ननु सर्वसमर्था भवती मगधप्रतिनिधित्वे?

मन्दाकिनी – अथ किम्। मगधराजेन स्वेच्छया राजपदं दूरीकृतम्। मगधहितं तथैव साधयामीत्यस्य भाव। अहमेव मगधशासिकेदानीम्। राज्ञीपदादेव मगधराष्ट्रं निवारयामीति मे निश्चय।

दुर्गेश्वरः – तत्किं मन्यते भवती।

मन्दाकिनी – वङ्गराज,

सेना प्रयातु भवतो निजवङ्गदेशं

युद्धं च यातु विलयं जनहानिहेतु।

दुर्गेश्वर. – कथमेतत् सम्भवति।

मन्दाकिनी

नोचेद् रणाय मगधा अभियान्तु वङ्गै-

र्यद् भावि तद् भवतु भो नियतीच्छयैव॥ १७॥

यद्रोचते तद् वृणोतु भवान्।

दुर्गेश्वर. – मगधराज सुधांशुरप्यत्रोपस्थित। स किमपि मच्छासनं स्वीकर्तुं बद्धपरिकर। तथैव भवत्पिताऽप्योप्यायाति सर्वसङ्कटात् तारयितुं कृतनिश्चयोऽत्र वर्तते। किमन्यद् वाञ्छितं स्यात्।

मन्दाकिनी – तत्किं कर्तुं समीहते भवान्।

दुर्गेश्वर. – प्रतियातु भवती पाटलिपुत्रम्। युद्धविरामं चोद्घोषयतु। मम सेना वङ्गान् प्रतियास्यति।

मन्दाकिनी – कथं तु भवदवमाननिष्कृति।

दुर्गेश्वर – मगधराज सुधांशुरप्यथापनिश्च राजा चण्डप्रतापो मया सह वङ्गान् गमिष्यत। तत्र यच्छासनं समीचीनं मन्यामहे तद्वितरिष्याम।

मन्दाकिनी – ज्ञातमेव भवता यन्मगधराज स्वनिषेधेऽपि सिद्ध। न पुनर्मगधप्रजास्त दूरीकर्तुमनुमन्येरन्। मगधसिंहासनं तस्य कृतेऽद्यापि शून्यं तिष्ठति। यदि

**द्वारपाल** – यथाज्ञापयति देव ।

(निष्क्रान्त । मन्दाकिनी प्रविशति ।)

**दुर्गेश्वर** – स्वागतं मगधराज्ञ्यै ।

**मन्दाकिनी** – नाथ, भवान् किमत्र कुरुते ।

**सुधांशु** – मगधसंरक्षणमहिंसानुष्ठानं च ।

**दुर्गेश्वर** किमागमनप्रयोजनं देवि शत्रुशिबिरे ।

**मन्दाकिनी** – वङ्गाधिपो न मे शत्रु । तात, कथं भवानत्र तिष्ठति ।

**राजा** मया प्रथमो जामाता रक्षणीयो द्वितीयश्चार्जनीय । द्वयो राष्ट्रयो कलह उपशमनीय । कन्या साहसात्परावर्तनीया । अन्यस्याश्च विवाह संपादयितव्य । हिंसाऽहिंसाविवादश्च शान्तिं नेय । इतीयं मे कर्तव्यपरंपरा ।

**मन्दाकिनी** – तेषु च सर्वमेकपदे विधातु ममोपक्रम । तथा च मया मगधाना राज्य पुनरर्जनीय ।

**राजा** साधु । वत्से, साधु ।

**मन्दाकिनी** – वङ्गराज,

भवदभीप्सितमत्र सुधांशुना

वचनमुक्तमतोऽस्य विनिष्कृति ।

मगधराज्यगनाग इति क्वचित्

न समराय भवेद् भरत स्पृहा ॥ १० ॥

अतो मगधराजराज्यत्यागानन्तरमपि, अस्ति युद्धे भवदासक्ति ।

**दुर्गेश्वर** – न कदापि युद्धेऽभूदासक्तिर्वङ्गराजस्य । देवि, ये स्वतत्त्वेनाहिंसाऽऽदृता तैरेव मन्यतेऽन्ये सर्वे हिंसावादिन इति । नैतत्सत्यम् । स्वाभिमानसंरक्षणं न हिंसात्वेन गण्यते यत ।

* प्रतिनिधिर्ननु वङ्गनिवासिना

मम मतो मगधै किमु सह्यते ।

न हि मया समरस्त्वभिनन्दितो

न च तथा स कदापि तिरस्कृत ॥ ११ ॥

अतो न मेऽकारणसमराय स्पृहा ।

भवानङ्गुलिमात्रमपि मगधराज व्यपनयेत्तन्मगधसेना बुभुक्षितव्याघ्रीवद् वङ्गबल व्यापादयिष्यति । भवान् मगधभूमौ वसतीदानीम् । न वङ्गभूमौ । न मगधेभ्यो निर्गन्तु भवद्बलमल स्यात् । अत –

* प्रतिचलतु च सेना वङ्गान् विना मगधेश्वर
जनपदपथे लप्स्यन्तेऽर्थास्तया मगधाध्वने ।
यदि भवता सार्धं राजा बलात्किल नीयते
निखिलपृतना वङ्गाना सा क्षणान्न भविष्यति ॥ १३ ॥

**दुर्गेश्वर** – तर्हि युद्धमवश्य भावि ।

**मन्दाकिनी** तथा च यदि मे पिता भवद्बन्धस्य इत प्रयाति तदय मे खङ्गस्तावन्न शान्तिमियाद् यावन्न स मोचित ।

**दुर्गेश्वर** – तत्कथ भवती मन्यत युद्धविरामसभवम् ।

**मन्दाकिनी** यदि भवान् मगधराज मुञ्चेत् तथा चायोध्यापतिं न बन्धे क्षिपेद् यदि च भवत्सेना वङ्गान् प्रतिनिवर्तेत तर्हि

**दुर्गेश्वर** – ( सोत्कण्ठ ) किं तर्हि—

**मन्दाकिनी** तर्हि मगधराज्ञी सुधांशुपत्नीयमयोध्यापतिदुहिता भवद्बन्धे स्थातुमनु मन्येत । मम पितु कृते, मम पत्यु कृते, मम राष्ट्रस्य कृते च मम जीवित भवद्धस्ते न्यासीक्रियेत । यदा च कालिन्दी भवत्पत्नी भवेद् भवांश्च मगधराज सम्बन्धी स्यात्तदैव मगधान् प्रतियास्यामि भर्तार पितर च द्रक्ष्यामि ।

**सुधांशु** – ( उत्थाय ) नैतत्सभवति ।

**राजा** – न श्रुतपूर्वमेतत् । न च सम्भवनीयमपि ।

**दुर्गेश्वर** तत्किं कुर्यां मगधराज । मह्य रोचते निवेदनमिद दृष्ट्वा । तद् भणतु मगधराज, एव कृते किं सभवेत् ।

**सुधांशु** – कुलप्रतिष्ठारक्षणार्थमग्निसमक्षपरिणीताया स्वामिन्या दुरितनिवारणार्थमेकमेव सभवेत् । वङ्गराज, नैतदनुष्ठेयम् । अह वङ्गान् नेय ।

**राजा** – अहमत्र तिष्ठामि । वङ्गराजशासन परिपालयितु समुत्कण्ठितोऽहम् । माऽन्य-चिन्तयतु भवान् वङ्गराज ।

दुर्गेश्वरः — यदि मन्त्रासनमनुमतमुत्तमेन च भवता तदा देवीं मया सार्धं बन्दित्वेन वङ्गान् गच्छतु । मगधराजश्च पुनर्मगधसिंहासनमलंकरोतु । भविष्यति पुनर्मेलनमस्माकं कालिन्दीविवाहमङ्गलसमये ।

सुधांशु — वङ्गराज, स्वाभिमानममलं निर्वहति भवान् । सोऽहमनेन भवता कृतः । मन्त्रासनं भवानेव आगामिनि तदङ्गीकर्तुं बद्धपरिकरोऽहमत्र । किमन्यदभिधास्ये ।

राजा — अहमपि सर्वसम्बन्धविच्छेदनाय मन्त्रासने स्थितः । सर्वथा मा मन्दाकिनीं बन्धे निक्षिपतु भवान् ।

दुर्गेश्वरः — मगधराजो भवानपि देव्यपि मन्त्रासने स्वतु स्पृहयन्ति । अतो यानानीह तिष्ठन्ति तान्यनुगन्तुं सुलभमेव ।

राजा — आज्ञापयतु भवान् ।

दुर्गेश्वर — यन्मया भाषितपूर्वं तदेव पुनरुच्चारयामि । मगधराजो मगधसिंहासनमलंकरोतु निग्रहानुग्रहं च पालयतु । अतोऽयोध्यापतिश्च स्वराज्यं प्रतिनिवृत्य कालिन्दीविवाहमङ्गलार्थं प्रयतताम् । देवी मन्दाकिनी मया सार्धं बन्धस्था वङ्गान् यास्यति । भगिनीविवाहमङ्गलसमये च प्रतिनिवर्तिष्यते ।

मन्दाकिनी — गृहीत वच । नाथ, मगधराजधानीं प्रविश्य सिंहासनमलंकरोतु राजदण्डं च धारयतु भवान् । तात, अभिवादये । कालिन्दीविवाहसज्जना विदधातु भवान् । नाथ आमन्त्रये । सुस्थिराहमधुना ।

* क्षणोऽयं मङ्गल्यादुदित इह यज्ञायचरणे
पुनः स्थाप्येते ते मगधनतिसिंहासनतले ।
तयाऽयोध्यानाथः परिभवपदान्मोचनमितो
न वा युद्धं कार्यं परिणयसुखं मे स्वसुरपि ॥ १४ ॥

सुधांशु — पूर्वमेव गदितं मया नैतत्समनेदिति ।

कुतो राजा जायां रिपुनलहृतां क्षत्रकुलजः
सहेत प्रज्ञावानपरिहततेजाः परिभवम् ।
अहिंसा हिंसा वा नृपतिचरितं दूषणयुतं
न शक्ता राज्ञि स्याद् भुवनदुरितं शंसितुमिद ॥ १५ ॥

दुर्गेश्वर – श्रुतमस्माभिरेतत् । न पुनर्ज्ञायते किं करिष्यति मगधराज ।

सुधांशु – किं करिष्यामि । शृणोतु भवान्—

> शस्त्रं वृणोमि, मम राजकुलप्रतिष्ठां
> रक्षामि तूर्णमपहाय कुलप्रतिज्ञाम् ।
> जानामि शाश्वतमहत्तरता कुलस्य
> स्यात् खण्डितव्रतमिति. पुनरेव लोके ॥ १६ ॥

दुर्गेश्वर न तर्हि व्रतं पालयेन्मगधाधिपोऽहिंसापरम् । अस्माकमप्येतदभिप्रेतम् । नैतं किंचित्कार्यमन्यत् । देवी मन्दाकिन्यपि मा मया सार्धमागच्छतु । अयोध्याधिप, स्वैरं विहर्तुं प्रभुर्भवान् ।

राजा तद्वय धन्या । किमर्थं तर्हि चङ्गमम भवतोऽधुना । अयोध्यां गत्वा विवाह सपाथैव वङ्गा प्राप्तव्या ।

दुर्गेश्वर –राजन् प्रथममेव मया सकल्पितं यावन्न मगधेश्वरो विवाहमनुमन्यते न तावद्विवाहमङ्गीकुर्याम् ।

हिमानी (प्रविश्य) हता वयं नाथ । प्रनष्टा कालिन्दी ।

सर्वे कथमिव ।

हिमानी तस्या अत्र आनयनार्थं प्रेषिता भवता दूता सैनिकाश्च । मार्गे तु श्रुतं तया तस्याः कृते मगधराजस्य राज्यत्यागो मन्दाकिन्याश्च समरप्लवनमिति । मा मत्कृतेऽय व्यतिकरो भवेदिति प्रयागतीर्थे तया गङ्गाप्रवाहे देहः क्षिप्त ।

सर्वे – हा धिक् । हा धिक् ।

दुर्गेश्वर –किमिदं दारुणं समापतितम् । हतदुर्दैव वञ्चिता वयं भवता ।

राजा कालिन्दी मन्दाकिनीप्रवाहे निमग्ना । हा कालिन्दि ।

मन्दाकिनी – सर्वपरिश्रमा व्यर्थत्वं गता ।

हिमानी – हा पुत्रि । (मूर्छति ।) (अन्ये तां परिचरन्ति ।)

॥ इति द्वितीयोऽङ्कः ॥

## ३

[ महाराजधान्यां निजप्रासादे विमनायमानो दुर्गेश्वर इतस्ततः सञ्चरति । ]

दुर्गेश्वर – (आत्मगतम्) कालिन्दि, त्वत्कृते सर्वोऽप्य समुद्यम समारब्ध आसीत्। कथं स व्यर्थीभूत । कुत्र ते जीवनम्। कुतो वा पुनर्दर्शनम्।

* दैवेन दुर्विलसितेन हि विप्रलब्धा
मत्या वयं, न सरला हतदैवनीति ।
कस्मान्मया तु भवती परिवीक्षिताऽपि
श्रेयोऽभविष्यदथ मे जलमज्जनेन ॥ १ ॥

अथवा,

* साफल्य नयने गते नु भवतीं काम निपीय प्रिये
न स्पर्शस्तु विमोहवानधिगतो मद्बाहुपाशेन ते ।
निःश्वासो न तवाधरे निपतितो मे सौख्यमन्दानिलो
न स्कन्धोऽपि तथा कृतः पुलकितो मूर्धोपधानादसौ ॥ २ ॥

मत्प्रेममूर्तीनां कुत्र शान्ति । प्रिये, त्वयापि कथमेव विहितम्।

*कथमेकपदे जलाशये
मृदुदेहो निहितस्त्वया प्रिये ।
अपि गाङ्गजलं हि निर्घृणं
निदधे रोधसि तं न यत्पुनः ॥ ३ ॥

न मे राज्यस्य स्पृहा । न जीवितस्य वापि । किमयं युद्धस्य दारुण परिपाकः ।

( ततः प्रविशति पुष्पहस्तः कैलासदासः । दुर्गेश्वरं प्रणम्य तस्मै पुष्पं समर्पयति । )

यथेदं सुकुमारं कुसुमं तथैव नरजीवनम् । क्षणमात्रमाशासुरङ्गान् प्रदर्श्य म्लायति ।

**कैलासदासः** – महाराज, सत्यमाह भवान् ।

न रूपं कुसुमानां वा नराणां वा चिरं भवेत् ।
ज्ञानसंन्यासपादाभ्यां नित्यात्मानं व्रजेन्नरः ॥ ४ ॥

**दुर्गेश्वरः** – कथं त्वमागतो भवान् ।

**कैलासदासः** – *प्रेषितोऽहं देव्या हिमान्या भवद्विमर्शाय ।*

**दुर्गेश्वरः** – को विमर्शो न । हिमानीदेव्या निजकन्याविलोपं सहते धीरभावेन ।

**कैलासदासः** – दुःखविलयनेऽस्त्यम्युपायो महाराज ।

**दुर्गेश्वरः** – को नाम ।

**कैलासदासः** – सर्वं दुःखं संसारिजनस्य भवति । नैव दुःखं सन्यासिनः ।

**दुर्गेश्वरः** – अप्यस्ति सुखं संन्यासिनः ।

**कैलासदासः** – यत्र यत्र दुःखाभावस्तत्र तत्र सौख्यमेव ।

न दुःखं न सौख्यं न भीतिर्न शङ्का
न हर्षश्च भव्यो न वासा अमर्षः ।
स्थिरं शाश्वतं केवलं ब्रह्म शान्तं
चिरं देव संन्यासिनो नित्यमुक्तम् ॥ ५ ॥

**दुर्गेश्वरः** – अहमपि मन्ये न सन्यासिनो दुःखं नापि च सुखम् । को लाभोऽस्मिञ्जीवने ।
अतो यस्य सुखमिष्टं तेन दुःखं सोढव्यमेव ।

**कैलासदासः** – संन्यासाद् भगवता गीता ब्राह्मी स्थितिः प्राप्यते ।

दुर्गेश्वर – कथ पुनर्नरपतिना सन्यासिना भवितव्यम् । को राज्यशासन कुर्यात् ।

( कालीप्रसाद प्रविशति । दुर्गेश्वर प्रणम्य तस्मै पत्राग्रफल प्रयच्छति । )

कालीप्रसाद –प्रेषितोऽह भवत्सकाशमयोध्यापतिना कुशल प्रष्टुम् । आम्रफल च तेनो पायनीकृत भवदर्थं । उत्तमपि यथेद स्वादुरसेन परिणम्य सतोषदायि भवति तथैव दु खाम्लता विमुच्य भवता राज्यकार्यं जनसतोषाय विधेयमिति ।

दुर्गेश्वर –आचार्य कैलासदासो मा सन्यासिवेषे बद्धोत्कण्ठिन । तत्रैव दु खसमाप्ति रिति तेनोपदिष्टम् ।

कालीप्रसाद –कथ राज सन्यास । प्रजापालन तस्यापरिहार्यमेव । यदि केवल दु ख नाशोऽभिप्रेतस्तर्हि श्रुतिप्रणीतो विधिमार्ग समाचरणीय ।

दुर्गेश्वर –कथमिव ।

कालीप्रसाद –प्रभूत यज्ञयागादि कर्मजात श्रुतिनिहित कारणवशात् । इष्टापूर्तादि विधेय महाराजेन ।

* इच्छापूर्तैर्देव यज्ञस्य वेदि
स्थान गीत साङ्गवेदैश्चिराय ।
अग्नौ सर्वं हूयते यत्र दु ख
सौख्य तस्माज्जायते यजमान ॥ ६ ॥

कैलासदास –मा मैव विपथ नयतु भवान् वत्सराजम् ।

नैव काम शाम्यते कामभोगै-
राज्याकारैर्वर्धते वह्निरेभि ।
का ग्रन्थित्वा ब्रह्म विन्देत योगी
जन्मव्याधिं कामकामी लभेत ॥ ७ ॥

कालीप्रसाद –रे कैलासदास, कथ सन्यास राज्ञ प्रशससि । केन कार्यं प्रजापालनम् । देवर्षिपितृणामानृण्य च कुत्र सन्यासेन ।

कैलासदास –सन्यासिन आनृण्यमेव ।

अनृणी ननु सन्यस्तो देयादेयैर्न बाध्यते ।
यो न वाञ्छति न द्वेष्टि नैव तस्य मवेदणम् ॥ ८ ॥

कालीप्रसादः – रे सन्यासप्रिय, यदि तव पिता बालसन्यास्यासीत् तर्हि कुतस्ते जन्म कुतो वा संन्यासप्रवचनम्। एतावानेव सन्यासिन प्रभाव। यदि संन्यास एव सत्यं तर्हि व्यर्थं तव जननम्।

दुर्गेश्वरः – मैव विवाद। कर्माणि संन्यास च यथाक्रम यथाकाल चरित्वा मुच्यते नर।

कैलासदास. – कर्माणि चरित्वा बध्यत एव स। न कर्मणा मुक्ति।

(राजा चण्डप्रतापो देवी हिमानी च प्रविशत।)

राजा – स्वस्ति वङ्गराजाय।

दुर्गेश्वर. राजन्, अभिवादये। देवि, अभिवादये। अलक्रियेतामासने।

हिमानी आचार्य कैलासदास, प्रेषितो भवान्मया वङ्गराजविमर्शाय। न च प्रतिनिवृत्य निवेदित किंचिद् भवता।

राजा मया च प्रेषित कालीप्रसाद। ननु वङ्गराजमनोविनोदन कुरुत।

दुर्गेश्वर· कैलासदासाभिप्रायो मे सन्यासग्रहण समुचितमिति।

हिमानी कथ भवत सन्यासग्रहणम्।

दुर्गेश्वर कालीप्रसादो मया यज्ञ कारयेत्।

राजा कालीप्रसाद, कैलासदास, उभावपि मूढौ। कस्य किं वक्तव्यमित्यपि न जानीतो भवन्तौ। तारतम्यज्ञान विना न पाण्डित्यप्रयोग शोभन। उक्तमासीन्मया वङ्गराजजन्मपत्रिकामधीत्य किंचित्कथयतामिति। किं सभूतमत्र।

हिमानी – कालिन्दीजन्मपत्रिकामपि परीक्षितवन्तौ। को लाभ। नैतौ शास्त्रनिपुणौ।

कालीप्रसाद. – मया तु कथितमेव नैष विवाह सपद्येत।

कैलासदास मया लब्धा पत्रिकैकाली। गृहस्वामी बुधस्तत्र कुम्भे पतित।

दुर्गेश्वर किमुक्तमासीद् भवता कालिन्दीग्रहपरीक्षणात्।

राजा स कथितवान् विवाह शिशिरर्तावस्मिन् भव्य इति।

दुर्गेश्वर – शिशिरर्तुस्तु प्रारब्ध एव।

राजा प्रारब्धगतिश्चिन्तनीया। गच्छता भवन्तौ निजकार्याय।

(आचार्यौ निष्क्रान्तौ।)

हिमानी – अपि कुशली वङ्गराज।

**दुर्गेश्वरः** यथाशक्ति कुशलस्य एव ।

**राजा** किञ्चिन्मनोविनोदन पर्यनुष्ठेयम् । मृगयाविहारो मम प्रमादध्यात् ।

**दुर्गेश्वरः** न हि न हि राजन् । नाना ग हिंसाप्रकारक मनोविनोदन मे रोचेत ।

**राजा** कथमिव ।

**दुर्गेश्वरः** केवल ममानमानविकृतिपर आत्मानं गच्छयमुद्धन परिणत । तथा च मगधराजस्य राज्यन्याग आपतित । अन्ते च कालिन्दीनिलयनम् । न पुनर्हिंसा माचरामि । शान्त मनोऽहिंसामार्गे स्थापयिष्यामि । न युद्धाश्रयो मयेदानीं कर्तव्य ।

अलं हिंसाविहारेण न युद्धाय मम स्पृहा
सर्वनाशे परिणतिर्हिंसामाचरतो यत ॥ ९ ॥

**राजा** विना युद्ध राज्यरक्षण न सुलभ स्यात् ।

**दुर्गेश्वरः** न युद्धमपि ननु सुकरम् । तथा च भवानयोध्यापतिस्तथा च मगधराजो मित्रत्वेन वर्तमानौ । कुतोऽत्र युद्धावसर । अन्य कश्चन नृपतिरिगजैकमन्यादेन न युद्धाय प्रवर्तेत । न राजन्, मम हिंसाचरणमधुना । समयुक्तांश्चवादेन सर्वा पृथ्वीपतिमसमश्च निरस्या ।

(सुधांशु प्रविशति ।)

**राजा** — स्वागतं भवतो मगधराज ।

**दुर्गेश्वरः** — कथ भवान सञ्जम् । ( तेन परिहितं भग्न वस्त्रादि निर्गतमुख्या दर्शयति ।)

**राजा** — ननु महदाश्चर्यमिदम् ।

**हिमानी** — ननु सुग्रीवे युद्धचतुरो मगधराज ।

**राजा** — तथापि सत्य परित्यक्तमासीदहिंसायनेन तेन ।

**सुधांशुः** — शान्तं शान्तम् । मयाऽहिंसायनं परित्यक्तम् ।

**दुर्गेश्वरः** — कथमयं वेश ।

**सुधांशुः** — न मयाऽहिंसायनस्याभिप्राय सम्यग्ज्ञातपूर्वं ।

**राजा** — कोऽत्र नवाभिप्राय ।

**सुधांशुः** — स देव्या मन्दाकिन्या प्रदर्शित ।

**हिमानी** — चतुरैव मम वत्सा ।

**दुर्गेश्वर** ॥ एषोऽभिप्राय । मया त्वाहिंसाव्रत स्वीकृतमिदानीमेव ।

**सुधांशु** साधु । साधु । तथापि न मत्कृत प्रमादमाचरतु भवान् ।

**दुर्गेश्वर** कोऽयं प्रमाद । कथं वा खड्गधनुर्धारिणोऽहिंसा ।

**सुधांशु** मया यत्पूर्वमहिंसाव्रत स्वीकृत का तस्या परिणति । वङ्गराजेन निजाऽपमानो मत इति प्रथमा । मम प्रजारक्षणविमुखत्वेन सङ्कटकाले राज्यत्याग प्रजापालनत्यागश्चेति द्वितीया परिणति ।

**राजा** – एवमेव निश्चयम् ।

**सुधांशु** – ततो मम पत्नी रणसमुखी जाता । निजस्थान परिहाय केवल प्रजाहिताय तया पीडा स्वीकृता । पतित्यागोऽपि समावी न तया परिगणित । एवं यस्या रक्षण मया कर्तव्य सा मगधदेवता विपदि परिहीना मयेति तृतीया परिणति ।

**हिमानी** – बहुव्यथा सोढा मम दुहित्रा ।

**सुधांशु** अतोऽपि बलवत्तरमन्यत् सजातम् । एत व्यतिक्रमसहमानया कालिन्दीदेव्या गङ्गाया मज्जन स्वीकृतम् । यद्येषाऽहिंसाव्रतस्य परिणति, यदि हिंसायामेवाहिंसा परिणमेत्, तत्कथ साऽहिंसा कथ वा तस्या व्रतत्वेन स्वीकार ।

हिंसाफलमहिंसाया सभवेन्न कदाचन ।
यत्रैव भासते नैषा सत्याहिंसा मत मया ॥ १० ॥

**राजा** साधूक्तम् ।

**सुधांशु** अतो ज्ञात मया हिंसाघातिनी भव्याहिंसा न हिंसापरिणामवती । अतो बलवतोऽहिंसा मया स्वीकृता । न दुर्बलस्यात परम् । हिंसाविघाताय यत्क्रियते ऽहिंसाव्रतस्येन, न तेन व्रतहानिरिति विदितमधुना । ॥ हिंसेच्छया हिंसा वार्या । एतदेवाऽहिंसाव्रतम् ।

**दुर्गेश्वर** एतदहिंसाव्रतमेव धारयामि । मृगयाऽपि वर्जिताऽत एव ।

**सुधांशु** अधुना वङ्गराज, भवत क्षमा याचे । मन्ये भवानेव कालिन्दीसमनुगुण पतिरभविष्यत् । तत्तु ज्ञातमतिविलम्बात् । कुतोऽधुना देवी कालिन्दी । अत एव मा क्षन्तुमर्हति वङ्गराज ।

**दुर्गेश्वर** – न क्षमायाचनमेव युक्त मगधराज ।

**सुधांशु** — भवत्यप्यपराद्धं मया राजन्नयोध्यापते । भवद्दुहितृनाशायाहमेव निमित्तकारणम् । यत्प्रायश्चित्तं भवानाज्ञापयति तद्विधातुं सिद्ध एव देहः ।

**राजा** — गतं न शोच्यम् । यद्येतावता सर्वदुरितं निरस्तं तर्हि साधु भवितव्यम् ।

**दुर्गेश्वर** — सर्वमितरत् सम्पद्येत । कुतः पुनः कालिन्दीजीवनम् ।

( मन्दाकिनी प्रविशति । तां पुरोहितद्वयमनुसरति । )

**मन्दाकिनी** — ( कैलासदासं प्रति ) तदपि सम्भवेत् ।

**दुर्गेश्वर** — किं सम्भवेत् । पुनर्जीवनम् ?

**मन्दाकिनी** — अयमाचार्यः पृच्छति । नाधुना कालिन्दीदर्शी । तस्या जन्मपत्रिका तु तस्या विवाहमस्मिन् दर्शयति शिशिरर्तौ । कथमेतत्सम्भवेदिति ।

**दुर्गेश्वर** — तत्कथं भवती वदति तदपि सम्भवेदिति ।

**मन्दाकिनी** — यदि जन्मपत्रिकैव शास्त्रपूतं दर्शयति तत्र किं वयं कुर्याम । न तत्र यदि कालिन्दीविलोपः प्रदर्शितस्तदपि किं कर्तुं शक्यम् ।

**कैलासदास** — ( जन्मपत्रिकां प्रदर्श्य ) किंचिद्दुरितं दर्शितमत्र न तु तन्महदिति निवेदितपूर्वं मया ।

**मन्दाकिनी** — किं वाऽनेनेदितेनापि । भवतु तत् । सर्वेषामहमपराधिनी क्षमां याचितुमत्रागता ।

**दुर्गेश्वर** — भवती नन्वपराधिनी ?

**राजा** — एव भासे । न त्वयापराद्धम् ।

**हिमानी** — न मे कन्याऽपराधिनीति वर्णयितुं कोऽपि प्रभवेत् ।

**सुधांशु** — देवि, त्वयैव मन्त्रयनेऽञ्जनं प्रयुक्तम् । ममाहिंसाव्रतं नाधुनाऽन्यप्रकारकम् । भवती रणे प्रेष्याहं भवत्या सुदूरमपराद्धः । तत्क्षन्तव्योऽहम् ।

* जनहितपरा मूर्तिर्दृष्टा यदा रणरागिणी
मनसि न च ते हिंसालेशो न वाऽऽचरणे तथा ।
विदितमथ मे श्रेयोऽहिंसारहस्यमतः प्रिये
चरणयुगलं याचे तस्मात्क्षमां मगधेश्वरि ॥ ११ ॥

मन्दाकिनी—यदा तु वङ्गाधिपो मां नेतुं प्रवृत्तस्तदा भवता युद्धसज्जता प्रदर्श्य स प्रतिषिद्धः। युद्धमपि च विश्रान्तम्। नातो भवानपराध्यति। तदेव च मे नाथसम्पदर्शने जातम्।

* यदा वल्लभूता विनिश्चितमता यशःसंभृता
स्थिता शिखरितायुता रुचिरमूर्तिरालोकिता।
तदा हृदि कृतार्थता हि भवदीयतेजोभरै-
र्धृता, नयनिता क्षणाद्, अवसरः क्षमार्थं कृतः॥ १२॥

राजा साध्वभिहितं वत्से।

मन्दाकिनी अम्ब, तव कन्या मम रणान्वेशावधि। तत्कथं मां न निषिध्यसि।

हिमानी यत्त्वया कृतं तन्मगधराजोपदस्य समुचितमेव। न तत्र मे रोषः।

मन्दाकिनी तात, नापि भवान् मे कुपितः।

राजा कुपितोऽहं वत्से, न तु भवत्यै। यदि कश्चन कोपार्हो मे, तदहं स्वयमेव। मयाऽऽहूतस्य वङ्गराजस्यापमानो मत्प्रासाद एव समजायत। तत्कथं त्वां प्रमादिनीं मन्येय।

मन्दाकिनी वङ्गराज, भवत्सम्मुखं रणे स्थित्वा साहसमनुष्ठितं मया। तत्क्षम्यतामियं कन्याया अमर्यादा।

दुर्गेश्वर राज्ञीपदस्य प्रतिष्ठेयम्। नामर्यादा।

मन्दाकिनी—ननु मन्ये कालिन्दीनिरोधेन न कोऽपि भवता निषीदति मां सापराधिनीं गणयति। तन्मन्ये मेऽभिनन्दितमेतद् घटितम्।

सर्वे—शान्तं पापम्।

मन्दाकिनी तत्कथं न कोऽपि तस्या विवाहं वङ्गराजेनापेक्षते।

हिमानी कुतो विवाहोऽधुना।

मन्दाकिनी—तत्कथमेष पण्डितो वदति कैलासदास शिशिरतौ कालिन्दीविवाह इति।

कैलासदास—न केवलं राजकन्याया अपि तु वङ्गराजस्य हि।

दुर्गेश्वर—गता देवी कालिन्दी। नातो मे विवाह



K 1

मन्दाकिनी – प्रथमताऽहं मगधाना राज्ञी ।                (पृ १२)

मन्दाकिनी—यदा तु वङ्गाधिपो मां नेतुं प्रवृत्तस्तदा भवता युद्धसज्जता प्रदर्श्य स प्रतिषिद्धः। युद्धमपि च विश्रान्तम्। नातो भवानपराध्यति। तदैव च मे नाथसम्यग्दर्शनं जातम्।

* यदा बलभृता विनिश्चितमता यशःसम्भृता
स्थिता शिखरितायुता रुचिरमूर्तिरालोकिता।
तदा हृदि कृतार्थता हि भवदीयतेजोभरै-
र्धृता, नयनिता क्षणाद्, अवसरः क्षमार्थं कुतः॥ १७॥

राजा साध्वभिहितं वत्से।

मन्दाकिनी अम्ब, तव कन्या मम रणनिशाचर्या। तत्कथं मां न निषिध्यसि।

हिमानी यत्त्वया कृतं तन्मगधराजीवदस्य समुचितमेव। न तत्र मे रोषः।

मन्दाकिनी तात, नापि भवान् मे कुपितः।

राजा कुपितोऽहं वत्से, न तु भवत्यै। यदि कश्चन क्रोधार्हो मे, तदहं स्वयमेव। मयाऽऽहूतस्य वङ्गराजस्यावमानो मत्प्रासाद एव समजायत। तत्कथं त्वां प्रमादिनीं मन्ये।

मन्दाकिनी वङ्गराज, भवत्सम्मुखं रणे स्थित्वा साहसमनुष्ठितं मया। तत्क्षम्यतामियं ललनाया अमर्यादा।

दुर्गेश्वर राजीवदस्य प्रतिष्ठेयम्। नामर्यादा।

मन्दाकिनी—ननु मन्ये कालिन्दीनिरोधेन न कोऽपि भवता विषीदति मां वापराधिनीं गणयति। तन्मन्ये मंगलाभिनन्दितमेतद् घटितम्। ८

सर्वे—शान्तं पापम्।

मन्दाकिनी तत्कथं न कोऽपि तस्या विवाहं वङ्गराजेनापेक्षते।

हिमानी कुतो विवाहोऽधुना।

मन्दाकिनी—तत्कथमेव पण्डितो वदति कैलासदासः शिशिरर्तौ कालिन्दीविवाह इति।

कैलासदास—न केवलं राजकन्यायाः अपि तु वङ्गराजस्य हि।

दुर्गेश्वर गता देवी कालिन्दी। नातो मे विवाहः।



K 143

मन्दाकिनी – प्रथमतोऽहं मगधाना राज्ञा ।　　(पृ १३)

गता नेत्रानन्दा विगत इह मे जीवनरसो
धृतो मन्दाकिन्या रहसि वहताद् गूढनिलयम् ।
न लोकेऽस्मिन्यायात् प्रकटमथ सा दर्शनपथं
न वास्यार्तस्य स्यात् वलनदगदो विस्मृतिगुणः ॥ १३ ॥

**कालीप्रसादः** – मा मा वङ्गराज । भवद्विवाहो निश्चित एव ।

**दुर्गेश्वरः** – कथं कर्ममार्गिणः सन्यासिनश्चैकमत्यम् ।

**राजा** – तर्हि पौरोहित्यमुभयोरप्यभविष्यद् यदि विवाहः समपत्स्यत ।

**सुधांशुः** – हिंसाऽहिंसाविवेकोऽप्युभयोरावयोरधुना समानः । अतोऽपि वङ्गराजोऽस्मत्संबन्धी भवितुमर्हति ।

**मन्दाकिनी** – यद्येवं तत्तथैव भवतु ।

**दुर्गेश्वरः** – किं कथं भवतु ।

**मन्दाकिनी** – तात, अम्ब, विवाहमङ्गलसज्जता विधीयताम् । अलं विषादेन । जीवति कालिन्दी ।

**सर्वे** – जीवति कालिन्दी ?

**दुर्गेश्वरः** – अलं परिहासेन । क्व वर्तते कालिन्दी । कथं पुनर्जीवितमापन्ना ।

* दग्धोऽङ्कुरः पल्लवमाप्नुयाद्वा
जलं वहत्यूर्ध्वमिव क्वचिद्वा ।
ननु प्रिया जीवितधारिणी सा
दैवाहिता या मम वञ्चनैषा ॥ १४ ॥

**मन्दाकिनी** – कालिन्दी मन्दाकिनीनदीप्रवाहे पतितेति भवद्भिः श्रुता वार्ताऽलीका । सा मगधराज्ञी-मन्दाकिनीपरिवारे वेषान्तरेण रक्षिता । मयैवैतत्कारितम् । यदा त युद्धं वङ्गराजेन सह मे प्रवृत्तं तदा स परिवारो मया महापुण्यायाः सरस्वत्या हस्ते समर्पितः । तया च स वङ्गान् प्रत्यानीतः ।

**दुर्गेश्वरः** – क्व वर्तते सा कालिन्दीदेवी ।

**मन्दाकिनी**—भवत्प्रासादसमीपमध्यास्यचिरमेव सुस्थिता । न पुनरपराधिनीं मां कोऽपि शासितुमीहते ।

**कालीप्रसादः**—कैलासदास, उभयोरपि पौरोहित्यमधुना ।

**कैलासदासः**—तथा च मम सुताविवाहोऽपि ननु ।

**दुर्गेश्वरः**—सर्वैस्तत्र गत्वा नेत्रसाफल्यमनुवर्तनीयम् । वङ्गराज्ञी भूत्वा देवी कालिन्दी वङ्गाधिदेवताकालीपदं पूजयतु । स्वतन्त्र एवास्या मार्गो मन्दाकिन्या भवतु ।

**राजा**—तथास्तु ।*

(सर्वे निष्क्रान्ताः ।)

## ॥ प्रार्थना ॥

* वङ्गानां भाग्यलक्ष्मीः सुफलितमगधा ब्रह्मपुत्रीसहाया
कालिन्दीजीवनौघा मधुरजलवहा जाह्नवीशुद्धतोया ।
येन क्रीडाकृतेऽसा अहिविषकलुषा निश्चितासीद्वयस्या
वन्दे देवं मुकुन्दं तमवनतशिरा भारतैकात्मतायै ॥ १५ ॥

॥ इति तृतीयोऽङ्कः ॥

॥ समाप्तम् ॥

## परिशिष्टं १.

# कालिन्दी

## [नाट्यप्रयोगे गीयमानानि गीतानि]

**सूचनाः** यस्य श्लोकस्य स्थाने गानं गेयं तत्र तस्य श्लोकस्य सदर्भः प्रतिगानारम्भे निर्दिष्टः ।

प्रथमोऽङ्कः ।

(प्रारंभे)

**काळीप्रसादः**–जनोऽयं पुरोधाः सुविख्यातनामा
काळीप्रसादो वासिष्ठजन्मा ॥
अयोध्येशकन्या विवाहे प्रदेया
भवेयुश्च पूर्णा मे द्रव्यकामाः ॥ (झपतालः केदारः)

६ **काळीप्रसादः**–कुलागता नियता विहिता
जीविका कथं सा विपरीता ॥
निजकर्तव्ये नरो निरतः
निरन्तरमूनां श्रियमधिगन्ता
प्रथयति वचनं भगवद्गीता । (त्रितालः, अडाणाकानडा)

**मन्दाकिनी**– (प्रविश्य) विवाहमंगलता समुदिता
सुहृत्स्वकीयाः सर्वे समिताः ।
कालिन्दीदुर्गेश्वरयोगे
मन्दाकिन्यपि चेतसि मुदिता ॥ (त्रितालः, मालराणी)

**सुधांशुः**– ('मगधा अहिंसाव्रताः ।' इत्युक्त्यनन्तर)
भुवनेषु मगधा अहिंसाव्रताः
हिंसा न मान्या नितरां निरस्ता ।
न रणं प्रयाता स्वमनोविजेता
जनमानसंमानसमता मयाप्ता ॥ (झपतालः, हमीरः)

**मन्दाकिनी** – भवत्प्रासादसमीपमलञ्चिविर एव सुस्थिता । न पुनरपराधिनीं मां कोऽपि शासितुमीहते ।

**कालीप्रसादः** – कैलासदास, उभयोरपि पौरोहित्यमधुना ।

**कैलासदासः** – तथा च मम सुताविवाहोऽपि ननु ।

**दुर्गेश्वरः** – सर्वैस्तत्र गत्वा नेत्रसाफल्यमनुवर्तनीयम् । वङ्गराज्ञी भूत्वा देवी कालिन्दी वङ्गाधिदेवताकालीपदं पूजयतु । स्वतन्त्र एवास्या मार्गो मन्दाकिन्या भवतु ।

**राजा** – तथास्तु ।*

(सर्वे निष्क्रान्ता ।)

## ॥ प्रार्थना ॥

* वङ्गानां भाग्यलक्ष्मीः सुफलितमगधा ब्रह्मपुत्रीसहाया
कालिन्दीजीवनौघा मधुरजलवहा जाह्नवीशुद्धतोया ।
येन क्रीडाकृतेऽसा अहिविषकलुषा निश्चितासीद्वयस्या
वन्दे देवं मुकुन्दं तमवनतशिरा भारतैकात्मतायै ॥ १५ ॥

॥ इति तृतीयोऽङ्कः ॥

## ॥ समाप्तं कालिन्दीनाटकम् ॥

परिशिष्टं १.

# कालिन्दी

## [नाट्यप्रयोगे गीयमानानि गीतानि]

**सूचनाः** यस्य श्लोकस्य स्थाने गानं गेयं तत्र तस्य श्लोकस्य सन्दर्भः प्रतिगानारम्भे निर्दिष्टः।

### प्रथमोऽङ्कः ।

(प्रारंभे)

**कालीप्रसादः**– जनोऽयं पुरोधाः सुविख्यातनामा
कालीप्रसादो वसिष्ठजन्मा ॥
अयोध्येशकन्या विवाहे प्रदेया
भवेयुश्च पूर्णा मे हृद्यकामाः ॥ (झपतालः केदारः)

६ **कालीप्रसादः**– कुलागता नियता विहिता
जीविका कथं सा विपरीता ॥
निजकर्तव्ये नरो निरन्ता
निरन्तरभृतां श्रियमधिगन्ता
प्रथयति वचन भगवद्गीता । (त्रितालः, अडाणाकानडा)

**मन्दाकिनी**– (प्रविश्य) विवाहमंगलता समुदिता
सुहृत्स्वकीयाः सर्वे मिलिताः ।
कालिन्दीदुर्गेश्वरयोगे
मन्दाकिन्यपि चेतसि मुदिता ॥ (त्रितालः, मालाराणी)

**सुधांशुः**– ('मगधा अहिंसाम्नाः ।' इत्युक्त्यनन्तर)
भुवनेषु मगधा अहिंसाव्रता
हिंसा न मान्या नितरां निरस्ता ।
न रणं प्रयाता स्वमनोविजेता
अवमानसंमानसमता मयाप्ता ॥ (झपतालः, हमीरः)

राजा– (पुन प्रविष्ट एव)
विफला बत यात्रा घटिता
भिन्नयोजना कृता विधात्रा ॥
मगधो याता निनराज्यधरा
नैव विवाह सम्भवति३रा
याच्यते क्षमा मया विनम्रा ॥ (त्रिताल , तिलङ्ग)

[अथवा– वरेश्वर, निजदेश मगधपति प्रतियाता
न विवाहस्तनयाया एतादृशि सम्भविता ॥
याच्यते भवत्क्षमात्र यात्रा विफला जाता
पुनरपि नृप, सुमनोऽय शुभसमये समिलिता ॥ ] (दादरा)

१८ दुर्गेश्वर – अन्या ललना भवेन्न भार्या
वङ्गश्रीधार्या च नान्यया ।
अयोध्यापतेर्द्वितीयतनया
मम संसारे भूयाज्जाया ॥ (त्रिताल , शकरा)

२१ राजा– श्रेयसेऽत्र य कुरुते वधूपिता
जाहैस्तस्य मतिरप्यपलपिता ॥
कृतिरपि यद्विकृतिरिय विकल्पिता
तस्य कोऽपि न च सुपथ प्रकल्पिता ॥
न कदा चिन्ताऽज्वाला विलोपिता
सुतापिता सुतापित सन्तपिता ॥ (दादरा, सारग)

२२ मन्दाकिनी– न तु शिथिला ज्या धनुषि नियोज्या
पीडा ढाया न भवेद् बीज्या ॥
यद्दीयसेना रणाय सज्जा
दया मदीया न हि तेनाज्यां ॥ (त्रिताल , बहार)

२७ सुधाशु – सम्भवति नैतदिह राज्ञि धन्ये ॥
विस्मृति स्यात्कथ मगधनियमस्य मे
युध्यमाना कथ त्वाऽनुमन्ये ॥ (झपताल , भूप)

२९ सुधाशु – समर हानिकर दुष्कर
रोद्धु नाह क्षमो व्यतिकरम् ॥
यदि देवी सा श्रयति समर
दुरितमिद स्यात ततोऽनिवारम् ॥ (त्रिताल , जयजयवती)

२ कालीप्रसादः– विपरीता जनरीती रूक्षरञ्जिका
रणरसिका ननु रमणी रूढिभञ्जिका ॥
व्रजति नृपो वनवासी
भवत्यसिलता दासी
सेना संगरसज्जा न तु समुत्सुका ॥ (एकतालः, माढः)

३ दुर्गेश्वरः– समरे ललना स्वयमवतीर्णा
असुरमर्दिनी किमियमपर्णा ॥
मौर्वी न स्याद् यद्यपि वितीर्णा
विना जयं या विफला क्रमणा ॥ (त्रितालः, तिलककामोदः)

राजा– (सुधांशुवचनमुद्धरति)
अभिधावति मगधान् कुपितो
यद्महीभृद् अहिंसाभिधान् ॥
भवती श्रेयो मगधरक्षणं
मन्यते नयति युधि योधान् ॥ (त्रितालः, दुर्गा)

७ दुर्गेश्वरः– विजयवति मयि का विभूषा
अपजयेन तु मानमोषा ॥
प्रकटयस्व निदिश राजन्
अलमिदानीं तेन धनुषा ॥ (रूपकः, असावरी)

[अथवा– नाहो राजन् न मे मनीषा
विजयेनापि च न मेऽत्र भूषा ॥
आदिशतु भवान् पथं सुमनस्का
मा भूदधुना कृतिः सदोषा ॥ (त्रितालः)

९ सुधांशुः– भीतो नाहं दण्डाद् राजन्
कर्मविपाकोद्गमाः प्रत्यहम् ॥
मागधाः प्रजा यतो ह्यदोषाः
मा कुरु तासां वृथैव दाहम् ॥ (त्रितालः, पटदीपः)

११ दुर्गेश्वर – आराधना या रणदेवताया
विहिता मया सा जनतारिकाया ॥
समरे मनीषा रिपुताजिगीषा
अवमानभाया त्वसह्या सदैषा
लेशोऽपि हृदि मे न रणलालसाया ॥ (झपताल, हंसध्वनि)

[अथवा– निमन्त्रित न रण मरण
कदापि च मया न तिरस्करणम् ॥
कुलोऽपि न सहे ममावमान
करोमि भूमेर्मानरक्षणम् ॥ (त्रिताल )]

१३ मन्दाकिनी– विना मगधपतिना सेना
प्रयातु वल्गान् प्रमोदितजना ॥
नीयते बलाद् यदि किल राजा
विनश्येत् क्षणात् निखिला पृतना ॥ (त्रिताल, देसकार)

१४ मन्दाकिनी– उदिता मंगलघटिका ह्येषा
नाथ तोषिता चरणसेविका ॥
निरस्तसमरा समाहितधरा
यान्तु सैनिका गेह पथिका ॥ (केरवा, कलावती)

१६ सुधांशु – करोमि दारग्रहण राजन्
कुलप्रतिष्ठानित्यरक्षणम् ॥
मते खण्डिते भवेत् क्षालन
कुले दण्डिते कुत उद्धरणम् ॥ (त्रिताल, सोहनी)

१-२-३ दुर्गेश्वरः— ननु गता निर्घृणा
प्रिया तया मम कथं निगीर्णा ॥
जीवनयात्रा स्थिता त्वपूर्णा
आशा निखिला मम्नविदीर्णा ॥ (त्रिताल , बैरागी)

६ कालीप्रसादः— यजुर्वेदे सामवेदे संविदे सवादिता
यजमानो जातवेदसि निर्दहन्ति हि दुरितता ॥
कर्म भुक्त्वा भस्म कृत्वा शर्मभाजो धर्मगा
शान्तचिन्ता ध्वान्तमुक्ता दान्तचित्ता मोचिता ॥
(रूपक , दरबारी)

११ सुधांशुः—रणरागिणी रवबलाग्रणी
शूरा रमणी शमधरणी ॥
महिमा त्वया सुसीमान्विता
गुरुपद हिता मम गृहिणी ॥ (त्रिताल , खमाज)

१३ मन्दाकिनी— प्रीतिविरचिता स्थिता रतिमधुराप्लुता
मूर्तिरिह लोकिता नाथ नयने धृता ॥
शैलतुङ्गोन्नता जलधिगभीरता
सर्वसंशयितता चेतसो नि सृता ॥ (झपताल , चन्द्रिका)

१४ दुर्गेश्वरः— निर्नेकदामारा धारा
दग्धा पल्लविता किमङ्कुरा ॥
यदि कालिन्दी जीवपेया
जीवनधारा मे साधारा ॥ (त्रिताल , हिण्डोल)

राजा : (नाट्यान्ते)
तथास्तु ! सुखिनो भवन्तु सकला
दुरितविनाशैर्मतिश्च विमला ॥
रमणमदनयो सुते निवसता
कुलपरम्परा तत्रास्तु सफला ॥ (त्रिताल , मालकंस)

१५ भरतवाक्यम् : भारताना भिद्यमाना भाष्यमाना भावना
मानमानाभेदतायास्ते विलासा दोलना ॥
सिन्धुबिन्दौ फेनबुद्बुदवीचिरचनाकल्पना
सन्ति नाना सन्मुनीना साध्यसाधकसाधना
ता सुधा श्रीरामगाने भ्राजमाना पावना " (रूपक , भैरवी)

## परिशिष्टं २.

कालिन्दीनाटकं संक्षेपतः देहली–आकाशवाण्या प्रथमं ७–१–१९६४ दिने ध्वनिक्षेपितम्। तत्र सहभागिनः कलाकाराः अधोनिर्दिष्टाः।

| | | |
|---|---|---|
| निवेदयित्री | — | उत्तरा बावकर |
| गायिके | — | लक्ष्मी आगटे<br>उत्तरा बावकर |
| राजा चण्डप्रतापः | — | वासुदेव कुळकर्णी |
| मन्दाकिनी | — | मीना अन्तूरकर |
| सुधांशुः | — | विनायक ओझरकर |
| दुर्गेश्वरः | — | बालकृष्ण करंदीकर |
| लेखकः<br>दिग्दर्शकः<br>संगीतं | — | दादासाहेब वेलणकर |

# परिशिष्टं ३.

आकाशवाणी प्रयुक्ते कालिन्दीनाटके इमानि पद्यानि गीतानि सरागतालम्।

देहली—७-९-१९६४

### अङ्कः १ : (त्रितालः, पटदीपः)

निवेदयित्री— मन्दाकिनीभगिनी ह्लादिनी।
वङ्गाङ्गियसङ्गे रता मानिनी ॥
गाङ्गे जलाङ्गे प्रयागे द्रवन्ती
कृष्णस्वरूपं प्रमथं स्रवन्ती ॥
श्रीरामकमनीयरचनाप्रणयिनी ॥

### अङ्क २ : (दादरा काफी)

वङ्गवसुधाधीशेन प्रियसुतायाः
करग्रहणं निश्चेतुमद्य राज्ञा।
प्रविष्टोऽसौ चण्डप्रतापनामा
रसिकसुजन, भव सावधानचेताः ॥

*

निवेदयित्री— उपयुद्धदेवता रणाग्रसंमुखी स्थिता।
मागधी समुत्थिता समग्रशस्त्रसंभृता ॥
भंगराष्ट्रशोणिताप्लुता तुङ्गनादसंगता
अङ्गना विराजिता हयाद्रिरत्नालंकृता ॥
वङ्गवीरसंहिता वरङ्गिमानसा कृता
देवतापदं गता न देहभावधामता ॥

### अङ्क ३ : (त्रितालः वसन्तः)

हृदयकान्ता न तु विदिता
दूरहिता रहिता दुरिताद् दयिता
राज्ञा शोकजले निमज्जिता
दीनं सुतरां परिदेविता विरता देवता ॥

## परिशिष्टं ४.

कालिन्दीनाटकस्य रङ्गमञ्चे प्रथमप्रयोगः भोपाल्नगरे १४–११–१९६६ दिनाङ्के श्री. चिं. द्वा. देशमुखमहाशयाना मुख्य-अतिथित्वे प्रदर्शितः । तत्र सहभागिनः कलाकाराः ।

| | | |
|---|---|---|
| काळीप्रसादः | — | विठ्ठल घोपाटे |
| कैळासदासः | — | माधव आमदार |
| राजा | — | पंडितराव चाटी |
| हिमानी | — | शैला गडकरी |
| मन्दाकिनी | — | प्रतिभा उपगडे |
| सुधांशुः | — | पद्माकर चित्रे |
| दुर्गेश्वरः | — | मनोहर देव |
| दिग्दर्शनं | — | दादासाहेब वेलणकर<br>विनायक चासकर |
| संगीतं | — | दादासाहेब वेलणकर |

## कालिन्दी

ले० श्री. भि. वेलणकर

### SOME OPINIONS

भवता नाट्यकाव्यरचनाप्राविण्यं पूर्वमेव विदितम्। रचना अतीव मनोहरा सुललिता च वर्तते। विषयास्तावत् कालानुकूलाः। अन्यस्तावत् सर्वेषां समाराधनाय स्यात् इत्यत्र नास्ति संदेहलेशोऽपि।

गणेशखिंड, पुणे २८ ४-६४

भवदीयः
दत्तो वामन पोतदार

श्रीमतां वेलणकरमहोदयानां काव्यप्रतिभा सर्वतोमुखी। नाट्यलेखने काव्यलेखने तेषां धीरप्रतिहता। तेषां रचनासु भाषा मधुरा शैली च आकर्षणक्षमा भवति। ते स्वरचनासु प्रायः वैदर्भीरीतिमेवावलम्बयन्ति। प्रस्तुतपुस्तकमपि तेषां यशोवर्धनम्। कालिन्दीनाटके अनेकशताब्दिपूर्वघटितघटनाया अंकन...लेखकमहोदयैः कृतमस्ति। तदिदं पुस्तकं मनोहारि, सामयिक, सरल तथा मनोरञ्जकं वर्तते। भाषाशैली च मधुरा या पाठकानां हृदयानि अनायासेनैव आकर्षति।

—अमृतलता, अगस्त १९६४.

Shri S B Velankar covers altogether new ground here His themes are modern but the compositions have a classical touch throughout *Kalindi*, featuring the geography of northern India, its rivers and cities is based on the eternal theme of violence and non-violence In the hands of Shri Velankar the Sanskrit language becomes fully vocal. It gains a special significance and the entire play is the more enjoyable on that account

To be able to take delight in classical Sanskrit by itself constitutes a great attainment in the present times, a flair for writing Sanskrit prose and verse must be considered a scholarly achievement which only a mastery of old classics could bestow To successfully compose features in the divine language (sometimes called a dead language) must be recognised as a mark of the highest merit Has it not been said—Natyam Kaveenam Nikasham Vadanti ? (Dramatisation verily constitutes a test of the poet scholar)

June 1964 —*The Indian PEN*

*Kalindi* describes the propagation of Vedic religion after the smash of Buddhism It deals mainly with *himsa* and *ahimsa* The drama is mainly intended to infuse the public mind for preparing towards war Therefore the audience will relish them as a poetic literature the language is smooth

—*Golconda Daily*

August 1964 (Original in Telugu)

I am very thankful to you for having sent to me a copy of your publication called *Kalindi* I am very happy to see that one scholar can write so fluently in Sanskrit even on modern topics that anybody can be proud of it

11 5 1964

MM PT UMESHA MISHRA,
Ganganath Jha Research Institute,
Allahabad

...पहिले नाटक कालिंदी आहे.. हिंसेंत परिणत होणाऱ्या भेकडाच्या अहिंसेपेक्षा अहिंसा स्थापन करणारी शूराची हिंसाच श्रेष्ठ होय. . सबंध नाटकात रंगभूमीवर एकदाहि पाऊल न टाकणाऱ्या पात्राचें नाव नाटकास देऊन लेखकानीं मोठा "मूकनायिका" चमत्कार घडवून आणला आहे आधुनिक संस्कृत नाट्याच्या क्षेत्रात श्री० वेलणकर ही अवतीर्ण झालेली नवीन शक्ति आहे. त्याच्याच नाटकातील दुसऱ्या एका सदर्भातले वाक्य या प्रसंगी म्हणावेंसे वाटते—'मन्दाकिनि प्रवहतात् पयस्ते पावन पुनः'

—केसरी १९-१०-६४.

I am particularly happy to say that you have developed to maturity a style and an expression that can easily be reminiscent of Bhasa and Kalidasa You have mastered the art of Dramaturgy and your direction as hithertofore is meticulously full Your dialogues are clear and pointed and verses and songs soft toned and tuned My own feeling (which of course may be subject to correction) was that the Sanskrit recitals of the female characters was yet superior to those of the males

Gwalior,
8 9-1964

—PROF R D LADDU

भवन्तो हि सदा धन्या सुरवागनुशीलिन.
भवतामनया कृत्या सुयशः प्रथतांतराम् ॥

होशियारपुर १४-५-६४. —विश्वबन्धुः